॥ श्रीः ॥

# मङ्गलाचरणम्

**रजोजुषेः जन्मनि, सत्त्व-वृत्तये स्थितौ, प्रजानां प्रलये तमःस्पृशे।**
**अजाय, सर्ग-स्थिति-नाश-हेतवे, त्रयीमयाय, त्रिगुणात्मने नमः ॥ १ ॥**

जन्यपदार्थानां उत्पत्तिकाले रजोगुणावलम्बिने, परिपालनसमये सत्त्वगुणविशिष्टाय, विनाशकाले तमोगुणभाजे, सृष्टि-रक्षा-संहारकारणीभूताय, ब्रह्मविष्णुशिवस्वरूपाय ऋग्यजुःसामरूपाय वा, मायाशालिने जन्मरहिताय नमः (अस्ति)।

**जयन्ति बाण-असुर-मौलि-लालिता दश-आस्य-चूडामणि-चक्र-चुम्बिनः।**
**सुर-असुर-अधीश-शिख-अन्त-शायिनः भवच्छिदः त्र्यम्बक-पाद-पांसवः ॥ २ ॥**

बाणाख्य-परमशिवभक्त-मुकुट-उपसेविताः, रावण-किरीट-रत्न-समुदाय-स्पर्शिनः, देवराज-दैत्यराज-चूडाग्रभाग-अवस्थान-शीलाः, संसार-बन्धन-निवर्त्तकाः मोक्षप्रदाः, शङ्कर-चरण-रेणवः सर्वोत्कर्षेण वर्तन्ते।

**बाणासुरमौलिललिता** - बाणः च असौ असुरः (न सुरः इति नञ्, नलोपः) च इति कर्मधारयः। तस्य मौलिः (मूर्धा मुकुटं वा) इति षष्ठीतत्पुरुषः। तेन लालिताः (सादरं स्पृष्टाः) इति तृतीयातत्पुरुषः।

-*-*-*-

# शुकनासोपदेशवर्णनम्

एवं समतिक्रामत्सु दिवसेषु, राजा, चन्द्रापीडस्य यौवराज्याभिषेकं चिकीर्षुः, प्रतीहारान् उपकरण-सम्भार-संग्रहार्थम् आदिदेश। समुपस्थित-यौवराज्य-अभिषेकं च, तं कदाचित् दर्शनार्थम् आगतम् आरूढ-विनयम् अपि विनीततरम् इच्छन् शुकनासः सविस्तरम् उवाच –

तात! चन्द्रापीड ! विदितवेदितव्यस्याधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति। केवलञ्च निसर्गत एवाऽभानुभेद्यमरत्नालोकच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम्। अपरिणामोपशमो दारुणो लक्ष्मीमदः। कष्टमनञ्जनवर्त्तिसाध्यमपरमैश्वर्य्यतिमिरान्धत्वम्। अशिशिरोपचारहार्य्योऽतितीव्रो दर्पदाहज्वरोष्मा। सततममूलमन्त्रशम्यो विषमो विषयविषास्वादमोहः। नित्यमस्नानशौचबाध्यो बलवान् रागमलावलेपः। अजस्रमक्षपावसानप्रबोधा घोरा च राज्यसुखसन्निपातनिद्रा भवतीति विस्तरेणाभिधीयसे।

‘तात ! चन्द्रापीड !

विदित-वेदितव्यस्य अधीत-सर्व-शास्त्रस्य ते न अल्पम् उपदेष्टव्यम् अस्ति।

केवलं च निसर्गतः एव

अभानु-भेद्यम्

अरत्न-लोक-च्छेद्यं

अप्रदीप-प्रभा-अपनेयम्

अति-गहनं तमः यौवन-प्रभवम्।

अपरिणाम-उपशमः दारुणः लक्ष्मी-मदः।

कष्टम् अनञ्जनवर्त्ति-साध्यम् अपरम् ऐश्वर्य-तिमिर-अन्धत्वम्।

अशिशिर-उपचार-हार्य्यः अतितीव्रः दर्प-दाह-ज्वर-उष्मा।

सततम् अमूलमन्त्र-शम्यः विषमः विषय-विष-आस्वाद-मोहः।

नित्यम् अस्नान-शौच-बाध्यः बलवान् राग-मल-अवलेपः।
अजस्रम् अक्षपावसान-प्रबोधा घोरा च राज्य-सुख-सन्निपात-निद्रा भवति
इति विस्तरेण अभिधीयसे।

१) गर्भेश्वरत्वम् २) अभिनवयौवनत्वम् ३) अप्रतिमरूपत्वम् ४) अमानुषशक्तित्वम् चेति महतीयं खल्वनर्थपरम्परा सर्वा। अविनयानामेकैकमप्येषामायतनम्, किमुत समवायः। यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः। अनुज्झितधवलतापि सरागेव भवति यूनां दृष्टिः। अपहरति च वात्येव शुष्कपत्रं समुद्भूतरजोभ्रान्तिरतिदूरमात्मेच्छया यौवनसमये पुरुषं प्रकृतिः। इन्द्रियहरिण-हारिणी च सततदुरन्तेयमुपभोगमृगतृष्णिका। नवयौवनकषायितात्मनश्च सलिलानीव तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः। नाशयति च दिङ्मोह इवोन्मार्गप्रवर्तकः पुरुषमत्यासङ्गो विषयेषुः।

१) गर्भेश्वरत्वम् २) अभिनवयौवनत्वम् ३) अप्रतिमरूपत्वम् ४) अमानुषशक्तित्वम् च इति
महतीयं खलु अनर्थ-परम्परा सर्वा !
अविनयानाम् एकैकम् अपि एषाम् आयतनम्, किमुत समवायः।
यौवन-आरम्भे च प्रायः शास्त्र-जल-प्रक्षालन-निर्मला अपि कालुष्यम् उपयाति बुद्धिः।
अनुज्झित-धवलता अपि सराग-एव भवति यूनां दृष्टिः।
अपहरति च वात्य-इव शुष्कपत्रं समुद्भूत-रजोभ्रान्तिः अतिदूरम् आत्म-इच्छया यौवन-समये
पुरुषं प्रकृतिः।
इन्द्रिय-हरिण-हारिणी च सतत-दुरन्त-इयम् उपभोग-मृग-तृष्णिका।
नवयौवन-कषायित-आत्मनः च सलिलानि इव तानि एव विषय-स्वरूपाणि आस्वाद्यमानानि
मधुरतराणि आपतन्ति मनसः।
नाशयति च दिङ्मोहः इव उन्मार्ग-प्रवर्तकः पुरुषम् अति-आसङ्गः विषयेषुः।

भवादृशा एव भवन्ति भाजनान्युपदेशानाम्। अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखेनोपदेशगुणाः। गुरुवचनममलमपि सलिलमिव महदुपजनयति श्रवणस्थितं शूलमभव्यस्य। इतरस्य तु करिण इव शङ्खाभरणमाननशोभासमुदयमधिकतरमुपजनयति। हरत्यतिमलिनमन्धकारमिव दोषजातं प्रदोषसमयनिशाकर इव। गुरूपदेशः प्रशमहेतुर्वयःपरिणाम इव पलितरूपेण शिरसिजजालममलीकुर्वन् गुणरूपेण तदेव परिणमयति।

भवादृशाः एव भवन्ति भाजनानि उपदेशानाम्।
अपगत-मले हि मनसि स्फटिक-मणौ इव,
रजनिकर-गभस्तयः^shining-moon विशन्ति सुखेन उपदेश-गुणाः।
गुरुवचनम् अमलम् अपि सलिलम् इव
महद्-उपजनयति श्रवण-स्थितं शूलम् अभव्यस्य।
इतरस्य तु करिणः इव
शङ्ख-आभरणम् आनन-शोभा-समुदयम् अधिकतरम् उपजनयति।
हरति अति-मलिनम् अपि अन्धकारम् इव
दोषजातं प्रदोष-समय-निशाकरः इव।
गुरु-उपदेशः प्रशम-हेतुः वयःपरिणामः इव
पलित-रूपेण शिरसिज-जालम् अमली-कुर्वन् गुण-रूपेण तदेव परिणमयति।

अयमेव चानास्वादितविषयरसस्य ते काल उपदेशस्य। कुसुमशर-शर-प्रहारजर्जरिते हि हृदि जलमिव गलत्युपदिष्टम्। अकारणञ्च भवति दुष्प्रकृतेरन्वयः श्रुतं वाविनयस्य। चन्दनप्रभवो न दहति किमनलः ? किंवा प्रशमहेतुनापि न प्रचण्डतरीभवति वाडवानलो वारिणा ?

अयमेव च अनास्वादित-विषय-रसस्य ते कालः उपदेशस्य।
कुसुम-शर--शर-प्रहार-जर्जरिते हि हृदि जलम् इव गलति उपदिष्टम्।

अकारणं च भवति दुष्प्रकृतेः अन्वयः श्रुतं वा अविनयस्य।
चन्दन-प्रभवः न दहति किम् अनलः ?
किं वा प्रशम-हेतुना अपि न प्रचण्डतरी भवति वाडवानलः[वडवाग्निः] वारिणा ?

गुरुपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षममजलं स्नानम्, अनुपजातपलितादिवैरूप्यमजरं वृद्धत्वम्, अनारोपितमेदोदोषं गुरूकरणम्, असुवर्णविरचनमग्राम्यं कर्णाभरणम्, अतीतज्योतिरालोकः, नोद्वेगकरः प्रजागरः। विशेषेण राज्ञाम्। विरला हि तेषामुपदेष्टारः। प्रतिशब्दक इव राजवचनमनुगच्छति जनो भयात्। उद्दामदर्पाश्च पृथुस्थगित-श्रवणविवराश्चोपदिश्यमानमपि ते न श्रृण्वन्ति। श्रृण्वन्तोऽपि च गजनिमीलितेनावधीरयन्तः खेदयन्ति हितोपदेशदायिनो गुरून्। अहङ्कार-दाहज्वर-मूर्छान्धकारिता विह्वला हि राजप्रकृतिः, अलीकाभिमानोन्मादकारीणि धनानि, राज्य-विषविकार-तन्द्राप्रदा राजलक्ष्मीः।

गुरु-उपदेशः च नाम पुरुषाणाम्
अखिल-मल-प्रक्षालन-क्षमम् अजलं स्नानम्,
अनुपजात-पलितादि-वैरूप्यम् अजरं वृद्धत्वम्,
अनारोपित-मेदो-दोषं गुरूकरणम्,
असुवर्ण-विरचनम् अग्राम्यं कर्णाभरणम्,
अतीत-ज्योतिर्-आलोकः, न-उद्वेगकरः प्रजागरः।
विशेषेण राज्ञाम्।
विरलाः हि तेषाम् उपदेष्टारः।
प्रति-शब्दकः इव राजवचनम् अनुगच्छति जनः भयात्।
उद्दाम-दर्प-पृथु-स्थगित-श्रवण-विवराः च उपदिश्यमानम् अपि ते न श्रृण्वन्ति।
श्रृण्वन्तः अपि च गज-निमीलितेन अवधीरयन्तः खेदयन्ति हित-उपदेश-दायिनो गुरून्।
अहङ्कार-दाहज्वर-मूर्छा-अन्धकारिता विह्वला हि राज-प्रकृतिः,

अलीक-अभिमान-उन्मादकारीणि धनानि,
राज्य-विष-विकार-तन्द्री-प्रदा राजलक्ष्मीः ।

आलोकयतु तावत् कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम् । इयं हि खड्गमण्डलोत्पल-वन-विभ्रम-भ्रमरी लक्ष्मीः क्षीरसागरात् पारिजातपल्लवेभ्यो रागम्, इन्दुशकलादेकान्तवक्रताम्, उच्चैःश्रवसश्चञ्चलताम्, कालकूटान्मोहनशक्तिम्, मदिराया मदम्, कौस्तुभमणेर्नैष्ठुर्य्यम्, इत्येतानि सहवास-परिचयवशाद्विरहविनोदचिह्नानि गृहीत्वेवोद्गता (/गृहीत्वैवोद्गता) ।

आलोकयतु तावत् कल्याण-अभिनिवेशः लक्ष्मीम् एव प्रथमम् ।
इयं हि खड्ग-मण्डल-उत्पल-वन-विभ्रम-भ्रमरी लक्ष्मीः
क्षीर-सागरात् पारिजात-पल्लवेभ्यः रागम्,
इन्दु-शकलात् एकान्त-वक्रताम्,
उच्चैः-श्रवसः चञ्चलताम्,
काल-कूटात् मोहन-शक्तिम्,
मदिरायाः मदम्,
कौस्तुभ-मणेः नैष्ठुर्यम्,
इति एतानि सहवास-परिचय-वशात् विरह-विनोद-चिह्नानि गृहीत्वा इव उद्गता ।

नह्येवंविधमपरिचितमिह जगति किञ्चिदस्ति, यथेयमनार्या । लब्धापि खलु दुःखेन परिपाल्यते । दृढगुण-सन्दान-निष्पन्दीकृतापि नश्यति । उद्दाम-दर्प-भटसहस्रोल्लासितासिलता-पञ्जर-विधृताप्यपक्रामति । मदजल-दुर्दिनान्धकारगजघटित-घन-घटा-परिपालितापि प्रपलायते, न परिचयं रक्षति, नाभिजनमीक्षते, न रूपमालोकयते, न कुलक्रममनुवर्तते, न शीलं पश्यति, न वैदग्ध्यं गणयति, न श्रुतमाकर्णयति, न धर्ममनुरुध्यते, न त्यागमाद्रियते, न विशेषज्ञतां विचारयति, नाचारं पालयति, न सत्यमबुध्यते, न लक्षणं प्रमाणीकरोति ।

न हि एवं-विधम् अपरिचितम् इह जगति किञ्चित् अस्ति, यथा इयम् (लक्ष्मीः) अनार्या।

लब्धा अपि खलु दुःखेन परिपाल्यते।

दृढ-गुण-पाश-सन्दान–निष्पन्दी-कृतापि नश्यति।

उद्दाम–दर्प–भटसहस्र-उल्लासिता-असिलता-पञ्जर–विधृता अपि अपक्रामति।

मदजल-दुर्दिन-अन्धकार–गज–घन-घटा परिपालिता अपि प्रपलायते,

न परिचयं रक्षति,

न अभिजनम् ईक्षते,

न रूपम् आलोकयते,

न कुल-क्रमम् अनुवर्तते,

न शीलं पश्यति,

न वैदग्ध्यं गणयति,

न श्रुतम् आकर्णयति,

न धर्मम् अनुरुध्यते,

न त्यागम् आद्रियते,

न विशेष-ज्ञतां विचारयति,

न आचारं पालयति,

न सत्यम् अबुध्यते,

न लक्षणं प्रमाणी-करोति।

गन्धर्वनगरलेखेव पश्यत एव नश्यति। अद्याप्यारूढ-मन्दर-परिवर्तावर्त्त-भ्रान्ति-जनित-संस्कारेव परिभ्रमति। कमलिनी-सञ्चरणव्यतिकर-लग्न-नलिन-नाल-कण्टकेव न क्वचिदपि निर्भरमाबध्नाति पदम्। अतिप्रयत्नविधृतापि परमेश्वरगृहेषु विविध-गन्धगज-गण्ड-मधुपान-मत्तेव परिस्खलति। पारुष्यमिवोपशिक्षितुमसिधारासु निवसति। विश्वरूपत्वमिव ग्रहीतुमाश्रिता नारायणमूर्तिम्।

(लक्ष्मीः) गन्धर्व-नगर-लेख-इव पश्यतः एव नश्यति।

अद्य अपि आरूढ-मन्दर-परिवर्त-आवर्त्त-भ्रान्ति-जनित-संस्कार-इव परि-भ्रमति।

कमलिनी-सञ्चरण-व्यतिकर-लग्न-नलिन-नाल-कण्टकेव न क्वचित् अपि निर्भरम् आबध्नाति पदम्।

अति-प्रयत्न-विधृता अपि परमेश्वर-गृहेषु विविध-गन्धगज-गण्ड-मधुपान-मत्ता इव परिस्खलति।

पारुष्यम् इव उपशिक्षितुम् असिधारासु निवसति।

विश्व-रूपत्वम् इव ग्रहीतुम् आश्रिता नारायण-मूर्तिम्।

अप्रत्ययबहुला च दिवसान्त-कमलमिव समुपचित-मूल-दण्ड-कोष-मण्डलमपि मुञ्चति भूभुजम्। लतेव विटपकानध्यारोहति। गङ्गेव वसुजनन्यपि तरङ्गबुद्बुद-चञ्चला। दिवसकरगतिरिव प्रकटित-विविध-संक्रान्तिः। पातालगुहेव तमोबहुला। हिडिम्बेव भीमसाहसैकहार्य्यहृदया। प्रावृडिवाचिरद्युतिकारिणी।

(लक्ष्मीः) अप्रत्यय-बहुला च दिवसान्त-कमलम् इव समुपचित-मूल-दण्ड-कोष-मण्डलम् अपि मुञ्चति भूभुजम्।

लता इव विटपकान् [वृक्षान्] अध्यारोहति।

गङ्गा इव वसु-जननी अपि तरङ्ग-बुद्बुद-चञ्चला।

दिवसकर-गतिः इव प्रकटित-विविध-संक्रान्तिः।

पातालगुहा इव तमो-बहुला।

हिडिम्बा इव भीम-साहस-एकहार्य्य-हृदया।

प्रावृट् [वर्षासमयः] इव आचिर-द्युति-कारिणी।

दुष्टपिशाचीव दर्शितानेकपुरुषोच्छ्राया स्वल्पसत्त्वमुन्मत्तीकरोति। सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति। जनं गुणवन्तमपवित्रमिव न स्पृशति, उदारसत्वममङ्गलमिव न बहु मन्यते, सुजनमनिमित्तमिव न पश्यति, अभिजातमहिमिव

लङ्घयति, शूरं कण्टकमिव परिहरति, दातारं दुःस्वप्नमिव न स्मरति, विनीतं पातकिनमिव नोपसर्पति, मनस्विनमुन्मत्तमिवोपहसति।

(लक्ष्मीः) दुष्ट-पिशाची इव दर्शित-अनेक-पुरुष-उच्छ्राया स्वल्प-सत्त्वम् उन्मत्ती-करोति।
सरस्वती-परिगृहीतम् ईर्ष्यया इव न आलिङ्गति।
जनं गुणवन्तम् अपवित्रम् इव न स्पृशति,
उदार-सत्वम् अमङ्गलमिव न बहु मन्यते,
सुजनम् अनिमित्तम् इव न पश्यति,
अभिजातम् अहिम् सर्पम् इव लङ्घयति,
शूरं कण्टकम् इव परिहरति,
दातारं दुःस्वप्नम् इव न स्मरति,
विनीतं पातकिनम् इव न उपसर्पति,
मनस्विनम् उन्मत्तम् इव उपहसति।

परस्परविरुद्धञ्चेन्द्रजालमिव दर्शयन्ती प्रकटयति जगति निजं चरितम्। तथाहि सततम् ऊष्माणमुपजनयन्त्यपि जाड्यमुपजनयति। उन्नतिमादधानापि नीचस्वभावतामाविष्कारोति। तोयराशिसम्भवापि तृष्णां संवर्धयति। ईश्वरतां दधानाप्यशिवप्रकृतित्वमातनोति। बलोपचयमाहरन्त्यपि लघिमानमापादयति। अमृतसहोदरापि कटुकविपाका। विग्रहवत्यप्यप्रत्यक्षदर्शना। पुरुषोत्तमरतापि खलजनप्रिया। रेणुमयीव स्वच्छमपि कलुषीकरोति।

(लक्ष्मीः) परस्पर-विरुद्धं च इन्द्रजालम् इव दर्शयन्ती प्रकटयति जगति निजं चरितम्।
तथाहि -
सततम् ऊष्माणम् उपजनयन्ती अपि जाड्यम् उपजनयति।
उन्नतिम् आदधाना अपि नीच-स्वभावताम् आविष्कारोति।
तोय-राशि-सम्भवा अपि तृष्णां संवर्धयति।
ईश्वरतां दधाना अपि अशिव-प्रकृतित्वम् आतनोति।

बल-उपचयम् बलवृद्धिम् आहरन्ती अपि लघिमानम् आपादयति।

अमृत-सहोदरा अपि कटुक-विपाका अप्रियरसा यथा।

विग्रहवती अपि अप्रत्यक्ष-दर्शना।

पुरुषोत्तम-रता अपि खल-जन-प्रिया।

रेणु-मयी इव स्वच्छम् अपि कलुषी-करोति।

यथा यथा चेयं चपला दीप्यते तथा तथा दीपशिखेव कज्जलमलिनमेव कर्म केवलमुद्वमति। तथाहि - इयं संवर्धनवारिधारा तृष्णाविषवल्लीनाम्, व्याधगीतिरिन्द्रियमृगाणाम्, परामर्शधूमलेखा सच्चरित-चित्राणाम्, विभ्रमशय्या मोहदीर्घनिद्राणाम्, निवासजीर्णवलभी धनमद-पिशाचिकानाम्, तिमिरोद्गतिः शास्त्रदृष्टीनाम्, पुरःपताका सर्वाऽविनयानाम्, उत्पत्तिनिम्नगा क्रोधावेगग्राहाणाम्, आपानभूमिर्विषयमधूनाम्, सङ्गीतशाला भ्रूविकारनाट्यानाम् आवासदरी दोषाशीविषाणाम्, उत्सारणवेत्रलता सत्पुरुषव्यवहाराणाम्, अकालप्रावृङ्गुणकलहंसकानाम्, विसर्पणभूमिर्लोकापवादविस्फोटकानाम्, प्रस्तावना कपटनाटकस्य, कदलिका कामकरिणः, वध्यशाला साधुभावस्य, राहुजिह्वा धर्मेन्दुमण्डलस्य।

(लक्ष्मीः) यथा यथा च इयं चपला दीप्यते तथा तथा दीपशिखा इव कज्जल-मलिनम् एव कर्म केवलम् उद्वमति। तथा हि -

इयं संवर्धन-वारि-धारा तृष्णा-विष-वल्लीनाम्,

व्याध-गीतिः इन्द्रिय-मृगाणाम्,

परामर्श-धूमलेखा सच्चरित-चित्राणाम्,

विभ्रम-शय्या मोह-दीर्घ-निद्राणाम्,

निवास-जीर्णवलभी प्राचीना गृहोपरिभागः धन-मद-पिशाचिकानाम्,

तिमिर-उद्गतिः शास्त्र-दृष्टीनाम्, पुरःपताका अग्रवैजयन्ती!! सर्व-अविनयानाम्,

उत्पत्ति-निम्नगा नदी क्रोध-आवेग-ग्राहाणाम् मकरादीनाम्,

आपान-भूमिः पानगोष्ठीस्थानम् विषय-मधूनाम्,
सङ्गीत-शाला भ्रू-विकार-नाट्यानाम्,
आवास-दरी कन्दरा दोषा-आशी-विषाणाम् सर्पाणाम्,
उत्सारण-वेत्रलता stick/whip? सत्पुरुष-व्यवहाराणाम्,
अकाल-प्रावृट् असमय-वर्षा गुण-कलहंसकानाम् कादम्बानाम् ducks,
विसर्पण-भूमिः विस्तरण-स्थानम् लोकापवाद-विस्फोटकानाम्,
प्रस्तावना कपट-नाटकस्य,
कदलिका रम्भा काम-करिणः,
वध्य-शाला साधु-भावस्य,
राहु-जिह्वा धर्म-इन्दु-मण्डलस्य।

न हि तं पश्यामि यो ह्यपरिचितयानया न निर्भरमुपगूढः। यो वा न विप्रलब्धः। नियतमियमालेख्यगतापि चलति, पुस्तमय्यपीन्द्रजालमाचरति, उत्कीर्णापि विप्रलभते, श्रुताप्यभिसन्धत्ते, चिन्तितापि वञ्चयति।

न हि तं पश्यामि यः (जनः) हि अपरिचितया अनया (लक्ष्म्या) न निर्भरम् गाढं उपगूढः आलिङ्गितः।

यः वा न विप्रलब्धः not deceived।
नियतम् इयम् आलेख्यगता चित्रस्थिता अपि चलति,
पुस्तमयीपुत्तलिका (/पुस्तकमयी ज्ञानमयी) अपि इन्द्रजालम् आचरति लुप्यति,
उत्कीर्णा अपि विप्रलभते परित्यजति,
श्रुता आकर्णिता अपि अभिसन्धत्ते turns hostile?,
चिन्तिता आध्याता अपि वञ्चयति।

एवंविधयापि चानया दुराचारया कथमपि दैववशेन परिगृहीता विक्लवा भवन्ति राजानः, सर्वाविनयाधिष्ठानताञ्च गच्छन्ति। तथाहि - अभिषेकसमय एव चैतेषां मङ्गलकलशजलैरिव प्रक्षाल्यते दाक्षिण्यम्, अग्निकार्यधूमेनेव मलिनीक्रियते हृदयम्,

पुरोहित-कुशाग्र-सम्मार्जनीभिरिवापह्रियते क्षान्तिः, उष्णीषपट्ट-बन्धेनेवाच्छाद्यते जरागमनस्मरणम्, आतपत्र-मण्डलेनेवापसार्यते परलोकदर्शनम्, चामरपवनैरिवापह्रियते सत्यवादिता, वेत्रदण्डैरिवोत्सार्यन्ते गुणाः, जयशब्दकलकलरवैरिव तिरस्क्रियन्ते साधुवादाः, ध्वजपटपल्लवैरिव परामृश्यते यशः।

एवं-विधया अपि च अनया दुराचारया कथम् अपि दैव-वशेन परिगृहीता विक्लवाः समाकुलाः भवन्ति राजानः, सर्व-अविनय-अधिष्ठानतां च गच्छन्ति। तथा हि –
अभिषेक-समये एव च एतेषां मङ्गल-कलश-जलैः इव प्रक्षाल्यते दाक्षिण्यम्,
अग्नि-कार्य-धूमेन एव मलिनी-क्रियते हृदयम्,
पुरोहित-कुशाग्र-सम्मार्जनीभिः इव अपह्रियते क्षान्तिः,
उष्णीष-पट्ट-बन्धेन इव आच्छाद्यते जरा-गमन-स्मरणम्,
आतपत्र-मण्डलेन छत्रेण इव आपसार्यते पर-लोक-दर्शनम्,
चामर-पवनैः व्यजन-वायुभिः इव अपह्रियते सत्य-वादिता,
वेत्र-दण्डैः whip? इव उत्सार्यन्ते गुणाः,
जय-शब्द-कलकल-रवैः इव तिरस्क्रियन्ते साधु-वादाः,
ध्वज-पट-पल्लवैः from flag-folds इव परामृश्यते यशः like logo fades? ।

[तथा हि -] केचित् श्रम-वश-शिथिल-शकुनि-गल-पुट-चपलाभिः खद्योतोन्मेष-मुहूर्त-मनोहराभिर्मनस्विजनगर्हिताभिः सम्पद्भिः प्रलोभ्यमाना, धन-लवलाभावलेपविस्मृत-जन्मानोऽनेकदोषोपचितेन दुष्टासृजेव रागावेशेन बाध्यमानाः, विविधविषय-ग्रास-लालसैः पञ्चभिरप्यनेक-सहस्रसंख्यैरिवेन्द्रियैरायास्यमानाः, प्रकृतिचञ्चलतया लब्धप्रसरेणैकेनापि शतसहस्रतामिवोपगतेन मनसाऽऽकुलीक्रियमाणा विह्वलतामुपयान्ति।

[तथा हि (राजानः) -] केचित्[१.३] श्रमवश-शिथिल-शकुनिpeacock-गलपुट-चपलाभिः[३.३],
खद्योतfirefly-उन्मेष-मुहूर्त्त-मनोहराभिः[३.३],
मनस्वि-जन-गर्हिताभिः[३.३],

सम्पद्भिः प्रलोभ्यमानाः[१.३],

धन-लव-लाभ-अवलेप-विस्मृत-जन्मानः[१.३]

अनेक-दोष-उपचितेन[३.१] दुष्ट-असृजा[३.१] by bad-blood

इव रागावेशेन[३.१] बाध्यमानाः[१.३],

विविध-विषय-ग्रास-लालसैः[३.३] पञ्चभिः[३.३] अपि अनेक-सहस्र-संख्यैः[३.३]

इव इन्द्रियैः[३.३] आयास्यमानाः[१.३],

प्रकृति-चञ्चलतया[३.१] लब्ध-प्रसरेण[३.१] एकेन[३.१] अपि शत-सहस्रताम्[२.१]

इव उपगतेन[३.१] मनसा[३.१] आकुली-क्रियमाणाः[१.३]

विह्वलताम्[२.१] उपयान्ति।

ग्रहैरिव गृह्यन्ते। भूतैरिवाभिभूयन्ते। मन्त्रैरिवावेश्यन्ते। सत्त्वैरिवावष्टभ्यन्ते। वायुनेव विडम्ब्यन्ते। पिशाचैरिव ग्रस्यन्ते। मदनशरैमर्माहता इव मुखभङ्गसहस्राणि कुर्वते। धनोष्मणा पच्यमाना इव विचेष्टन्ते। गाढप्रहाराभिहता इवऽङ्गानि न धारयन्ति। कुलीरा इव तिर्यक् परिभ्रमन्ति। अधर्मभग्नगतयः पङ्गव इव परेण सञ्चार्यन्ते। मृषावाद-विष-विपाक-सञ्जात-मुखरोगा इवातिकृच्छ्रेण जल्पन्ति। सप्तच्छद-तरव इव कुसुम-रजोविकारैः पार्श्ववर्तिनां शिरः शूलमुत्पादयन्ति। आसन्नमृत्यव इव बन्धुजनमपि नाभिजानन्ति। उत्कुपित-लोचना इव तेजस्विनो नेक्षन्ते। कालदष्टा इव महामन्त्रैरपि न प्रतिबुध्यन्ते। जातुषाभरणानीव सोष्माणं न सहन्ते। दुष्टवारणा इव महामानस्तम्भनिश्चलीकृता न गृह्णन्त्युपदेशम्। तृष्णाविषमूर्च्छिताः कनकमयमिव सर्वं पश्यन्ति। इषव इव पानवर्द्धिततैक्ष्ण्याः परप्रेरिता विनाशयन्ति। दूरस्थितान्यपि फलानीव दण्डविक्षेपैर्महाकुलानि शातयन्ति। अकालकुसुमप्रसवा इव मनोहराकृतयोऽपि लोकविनाशहेतवः। श्मशानाग्नय इवातिरौद्रभूतयः। तैमिरिका इवादूरदर्शिनः। उपसृष्टा इव क्षुद्राधिष्ठितभवनाः। श्रूयमाणा अपि प्रेतपटहा इवोद्वेजयन्ति। चिन्त्यमाना अपि महापातकाध्यवसायाइवोपद्रवमुपजनयन्ति। अनुदिवसमापूर्यमाणाः पापेनेवाध्मातमूर्तयो

भवन्ति। तदवस्थाश्च व्यसनशतशरव्यतामुपगता वल्मीकतृणाग्रावस्थिता जलबिन्दव इव पतितमप्यात्मानं नावगच्छन्ति।

(राजानः[१.३-उक्तकर्मत्वेन प्रथमान्तम्]) -

ग्रहैः गृह्यन्ते इव इवार्थस्य क्रियायामन्वयम् – **क्रियोत्प्रेक्षाऽलङ्कारः** ।

भूतैः अभिभूयन्ते[आक्राम्यन्ते] इव।

मन्त्रैः आवेश्यन्ते इव।

सत्त्वैः[हिंस्र-प्राणिभिः] अवष्टभ्यन्ते[बलाद्गृह्यन्ते] इव।

वायुना विडम्ब्यन्ते[कम्प्यन्ते] इव।

पिशाचैः ग्रस्यन्ते[भक्ष्यन्ते] इव।

मदनशरैः[कामबाणैः] मर्म-आहताः इव मुख-भङ्ग-सहस्राणि कुर्वते।

धन-ऊष्मणा[वित्तोन्मदजन्यतापेन] पच्यमानाः इव विचेष्टन्ते।

गाढ-प्रहार-अभिहताः [आहताः] इव अङ्गानि न धारयन्ति।

कुलीराः[कर्कटाः] इव तिर्यक् [कुटिलं] परिभ्रमन्ति।

अधर्म-भग्न-गतयः पङ्गवः[खञ्जाः-lame] इव परेण[अन्येन] सञ्चार्यन्ते।

मृषावाद[अनृतवाक्]-विष-विपाक-सञ्जात-मुखरोगाः इव अतिकृच्छ्रेण[क्लेशेन] जल्पन्ति।

सप्तच्छद-तरवः इव कुसुम-रजोविकारैः पार्श्ववर्तिनां शिरःशूलम् [शिरोवेदना] उत्पादयन्ति।

आसन्न-मृत्यवः इव बन्धुजनम् अपि न अभिजानन्ति।

उत्कुपित-लोचनाः[रुग्ण-नयने] इव तेजस्विनः न ईक्षन्ते।

कालदष्टाः[कालसर्प-दंशिताः] इव महा-मन्त्रैः अपि न प्रतिबुध्यन्ते।

जातुष[लाक्षा-lac]-आभरणानि इव स-ऊष्माणं[अग्निं] न सहन्ते।

दुष्ट-वारणाः इव महामान[दर्प]-स्तम्भ-निश्चलीकृताः न गृह्णन्ति उपदेशम्।

तृष्णा-विष-मूर्च्छिताः कनक-मयम् इव सर्वं पश्यन्ति।

इषवः[बाणाः] इव पान-वर्द्धित-तैक्ष्ण्याः पर-प्रेरिताः विनाशयन्ति।

दूर-स्थितानि अपि फलानि इव दण्ड-विक्षेपैः महाकुलानि[लोकान्] शातयन्ति[पातयन्ति]।

अकाल-कुसुम-प्रसवाः[untimely-flowerings] इव मनोहर-आकृतयः अपि लोक-विनाश-हेतवः।

श्मशान-अग्नय: इव अति-रौद्र-भूतय: ।

तैमिरिका:[नेत्र-रोग-युक्ता:] इव अदूर-दर्शिन: ।

उपसृष्टा:[रति-संलग्न-वेश्या:] इव क्षुद्र-अधिष्ठित-भवना: ।

श्रूयमाणा: अपि प्रेत-पटहा:[death-beats] इव उद्वेजयन्ति[उद्वेगं जनयन्ति] ।

चिन्त्यमाना: अपि महापातक-अध्यवसाया: इव उपद्रवम् उपजनयन्ति ।

अनुदिवसम्[प्रतिदिनम्] आपूर्यमाणा: पापेन इव आध्मात-मूर्तय:[स्थूलदेहा:] भवन्ति ।

तद्-अवस्था:(पूर्व-वर्णित-स्थिति-भूता:) च व्यसन-शत-शरव्यताम् उपगता: वल्मीक-तृणाग्र-अवस्थिता: जल-बिन्दव: इव पतितम् अपि आत्मानं न अवगच्छन्ति ।

अपरे तु – स्वार्थनिष्पादनपरैर्धन-पिशित-ग्रास-गृध्रैरास्थान-नलिनीबकैः - द्यूतं विनोद इति, परदाराभिगमनं वैदग्ध्यमिति, मृगया श्रम इति, पानं विलास इति, प्रमत्तता शौर्यमिति, स्वदारपरित्यागोऽव्यसनितेति, गुरुवचनावधीरणमपरप्रणेयत्वमिति, अजितभृत्यता सुखोपसेव्यत्वमिति, नृत्य-गीत-वाद्य-वेश्याभिसक्तिः रसिकतेति, महापराधानाकर्णनं महानुभावतेति, पराभवसहत्वं क्षमेति, स्वच्छन्दता प्रभुत्वमिति, देवावमाननं महासत्त्वतेति, वन्दिजनख्यातिर्यश इति, तरलता उत्साह इति, अविशेषज्ञता अपक्षपातित्वमिति दोषानपि गुणपक्षमध्यारोपयद्भिरन्तः स्वयमपि विहसद्भिः प्रतारणकुशलैर्धूर्तैरमानुषलोकोचिताभिः स्तुतिभिः प्रतार्यमाणा वित्तमदमत्तचित्ता निश्चेतनतया तथैवेत्यात्मन्यारोपितालीकाभिमाना मर्त्यधर्माणोऽपि दिव्यांशावतीर्णमिव सदैवतमिवातिमानुषमात्मानमुत्प्रेक्षमाणाः प्रारब्धदिव्योचितचेष्टानुभावाः सर्वजनस्योपहास्यतामुपयान्ति ।

अपरे तु (राजान:) – स्वार्थ-निष्पादन-परै: धन-पिशित-ग्रास-गृध्रै: आस्थान-नलिनी-बकै: -

द्यूतं विनोद: इति,

पर-दारा-अभिगमनं वैदग्ध्यम्[चातुर्यम्] इति,

मृगया[hunt] श्रम: इति,

पानं विलास: इति, प्रमत्तता[inattentiveness] शौर्यम् इति,

स्व-दारा-परित्यागः अव्यसनिता[non-attachment] इति,
गुरु-वचन-अवधीरणम्[उपेक्षा] अपर-प्रणेयत्वम्[स्वातन्त्र्यम्] इति,
अजित-भृत्यता[non-lordship over courtiers] सुख-उपसेव्यत्वम् इति,
नृत्य-गीत-वाद्य-वेश्या-अभिसक्तिः रसिकता इति,
महा-अपराधानाम् आकर्णनं[श्रवणं] महा-अनुभावता इति,
पराभव-सहत्वं क्षमा इति,
स्वच्छन्दता प्रभुत्वम् इति,
देव-अवमाननं महा-सत्त्वता इति,
वन्दिजन-ख्यातिः[appreciation by yes-men] यशः इति,
तरलता[fickleness] उत्साहः इति,
अविशेषज्ञता[non-discernment] अपक्षपातित्वम्[non-partisan] इति,
दोषान् अपि गुण-पक्षम् अध्यारोपयद्भिः,
अन्तः स्वयम् अपि विहसद्भिः,
प्रतारण-कुशलैः[वञ्चकैः] धूर्तैः,
अमानुष-लोक-उचिताभिः[देव-लोक-योग्याभिः] स्तुतिभिः प्रतार्यमाणाः[वञ्च्यमानाः-deniers],
वित्त-मद-मत्त-चित्ताः निश्चेतनतया तथैव इति आत्मनि आरोपित-अलीक-अभिमानाः[मिथ्याभिमानाः],
मर्त्य-धर्माणः अपि दिव्यांश-अवतीर्णम् इव सदैवतम् इव अतिमानुषम् आत्मानम् उत्प्रेक्षमाणाः,
प्रारब्ध-दिव्योचित-चेष्टा-अनुभावाः,
सर्वजनस्य उपहास्यताम् उपयान्ति।

आत्मविडम्बनाञ्चानुजीविना जनेन क्रियमाणामभिनन्दन्ति। मनसा देवताध्यारोपणविप्रतारणादसद्भूत-सम्भावनोपहताश्चान्तः प्रविष्टापरभुजद्वयमिवात्मबाहुयुगलं सम्भावयन्ति। त्वगन्तरिततृतीयलोचनं स्वललाटमाशङ्कन्ते। दर्शनप्रदानमप्यनुग्रहं गणयन्ति। दृष्टिपातमप्युपकारपक्षे स्थापयन्ति।

सम्भाषणमपि संविभागमध्ये कुर्वन्ति। आज्ञामपि वरप्रदानं मन्यन्ते। स्पर्शमपि पावनमाकलयन्ति। मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः, न पूजयन्ति द्विजातीन्, न मानयन्ति मान्यान्, नार्चयन्त्यर्चनीयान्, नाभिवादयन्त्यभिवादनार्हान्, नाभ्युत्तिष्ठन्ति गुरून्। अनर्थकायासान्तरितविषयोपभोग-सुखमित्युपहसन्ति विद्वज्जनम्, जरावैक्लव्यप्रलपितमिति पश्यन्ति वृद्धोपदेशम् (/वृद्धजनोपदेशम्) आत्मप्रज्ञापरिभव इत्यसूयन्ति सचिवोपदेशाय, कुप्यन्ति हितवादिने।

(राजानः)[a la Trump] – आत्म-विडम्बनां च अनुजीविना जनेन क्रियमाणाम् अभिनन्दन्ति।
मनसा देवता-अध्यारोपण-विप्रतारणात् असद्भूत-सम्भावन-उपहताः च अन्तः-प्रविष्ट-अपर-भुजद्वयम् इव आत्म-बाहु-युगलं सम्भावयन्ति।
त्वग्-अन्तरित-तृतीय-लोचनं स्व-ललाटम् आशङ्कन्ते।
दर्शन-प्रदानम् अपि अनुग्रहं गणयन्ति।
दृष्टिपातम् अपि उपकार-पक्षे स्थापयन्ति।
सम्भाषणम् अपि संविभाग-मध्ये[पारितोषिकप्रदानमन्ध्ये] कुर्वन्ति।
आज्ञाम् अपि वरप्रदानं मन्यन्ते।
स्पर्शम् अपि पावनम् आकलयन्ति।
मिथ्या-माहात्म्य-गर्व-निर्भराः च
न प्रणमन्ति देवताभ्यः, न पूजयन्ति द्विजातीन्, न मानयन्ति मान्यान्,
न अर्चयन्ति अर्चनीयान्, न अभिवादयन्ति अभिवादनार्हान्, न अभ्युत्तिष्ठन्ति गुरून्।
अनर्थक-आयास-अन्तरित-विषय-उपभोग-सुखम् इति उपहसन्ति विद्वज्जनम्,
जरा-वैक्लव्य-प्रलपितम् इति पश्यन्ति वृद्धोपदेशम् (/वृद्ध-जन-उपदेशम्),
आत्म-प्रज्ञा-परिभवः इति असूयन्ति सचिव-उपदेशाय,
कुप्यन्ति हितवादिने।

सर्वथा तमभिनन्दन्ति, तमालपन्ति, तं पार्श्वे कुर्वन्ति, तं संवर्धयन्ति, तेन सह सुखमवतिष्ठन्ते, तस्मै ददति, तं मित्रतामुपनयन्ति, तस्य वचनं शृण्वन्ति, तत्र वर्षन्ति, तं

बहु मन्यन्ते, तमाप्ततामापादयन्ति, योऽहर्निशमनवरतमुपरचिताञ्जलिरधिदैवतमिव विगतान्यकर्तव्यः स्तौति, यो वा माहात्म्यमुद्भावयति। किं वा तेषां साम्प्रतम्, योषामतिनृशंसप्रायोपदेशनिर्घृणं कौटिल्यशास्त्रं प्रमाणम्, अभिचारक्रियाक्रूरैकप्रकृतयः पुरोधसो गुरवः, पराभिसन्धानपरा मन्त्रिण उपदेष्टारः, नरपतिसहस्रभुक्तोज्झितायां लक्ष्म्यामासक्तिः, मारणात्मकेषु शास्त्रेष्वभियोगः, सहजप्रेमार्द्रहृदयानुरक्ता भ्रातर उच्छेद्याः।

सर्वथा तम् (जनम्) अभिनन्दन्ति, तम् आलपन्ति, तं पार्श्वे कुर्वन्ति, तं संवर्धयन्ति, तेन सह सुखम् अवतिष्ठन्ते, तस्मै ददति, तं मित्रताम् उपनयन्ति, तस्य वचनं शृण्वन्ति, तत्र वर्षन्ति, तं बहु मन्यन्ते, तम् आप्तताम् आपादयन्ति,
यः (जनः) अहर्निशम् अनवरतम् उपरचित-अञ्जलिः अधिदैवतम् इव विगत-अन्य-कर्तव्यः स्तौति, यः वा माहात्म्यम् उद्भावयति।
किं वा तेषां साम्प्रतं (/असाम्प्रतं),
योषाम् अति-नृशंसप्राय[क्रूर]-उपदेश-निर्घृणं[निर्दयं] कौटिल्य-शास्त्रं[(नीतिशास्त्रं कुटिलम् इति)] प्रमाणम्,
(येषाम्) अभिचार[निषिद्ध]-क्रिया-क्रूर-एक-प्रकृतयः[स्वभावाः] पुरोधसः[पुरोहिताः (एव)] गुरवः,
(येषाम्) पर-अभिसन्धान[वञ्चन]-पराः मन्त्रिणः उपदेष्टारः,
(येषाम्) नरपति[राजा]-सहस्र-[प्राक्]भुक्त-[पश्चात्]उज्झितायां[परित्यक्तायां] लक्ष्म्याम्[श्रियां तादृश्याम्] असक्तिः,
(येषाम्) मारण-आत्मकेषु शास्त्रेषु[तन्त्रेषु] (/शस्त्रेषु [आयुधेषु]) अभियोगः,
(तादृशाः) सहज-प्रेम-आर्द्र-हृदय-अनुरक्ताः[devoid of true love] भ्रातरः उच्छेद्याः[विनाशयोग्याः]।

तदेवंप्रायातिकुटिल-कष्ट-चेष्टा-सहस्र-दारुणे राज्यतन्त्रे, अस्मिन् महामोहकारिणि (/महामोहान्धकारिणि) च यौवने, कुमार ! तथा प्रयतेथाः यथा नोपहस्यसे जनैः, न निन्द्यसे साधुभिः, न धिक्क्रियसे गुरुभिः, नोपालभ्यसे सुहृद्भिः, न शोच्यसे विद्वद्भिः। यथा च न प्रकाश्यसे विटैः, न प्रहस्यसे कुशलैः, नास्वाद्यसे भुजङ्गैः, नावलुप्यसे सेवकवृन्दैः (/सेवकवृकैः), न वञ्चसे धूर्तैः, न प्रलोभ्यसे वनिताभिः, न विडम्ब्यसे

लक्ष्म्या, न नर्त्यसे मदेन, नोन्मत्तीक्रियसे मदनेन, नाक्षिप्यसे विषयैः, नावकृष्यसे रागेण, नापह्रियसे सुखेन। कामं भवान् प्रकृत्यैव धीरः, पित्रा च समारोपितसंस्कारः, तरलहृदयमप्रतिबुद्धञ्च मदयन्ति धनानि, तथापि भवद्गुणसन्तोषो मामेवं मुखरीकृतवान्।

तत् तस्मात् एवंप्राय-अतिकुटिल-कष्ट-चेष्टा-सहस्र-दारुणे भीषणे राज्यतन्त्रे, अस्मिन् अतिप्रसिद्धेऽनुभूयमाने महा-मोह-कारिणि (/महा-मोह-अन्ध-कारिणि) च यौवने, (हे) कुमार !

तथा प्रयतेथाः प्रयत्नं कुरु यथा -

न उपहस्यसे जनैः,

न निन्द्यसे साधुभिः,

न धिक्क्रियसे गुरुभिः,

न उपालभ्यसे सुहृद्भिः,

न शोच्यसे विद्वद्भिः।

(..तथा प्रयतेथाः..) यथा च -

न प्रकाश्यसे विटैः कामुकलोकैः,

न प्रहस्यसे कुशलैः,

न आस्वाद्यसे भुजङ्गैः धूर्तैः,

न अवलुप्यसे सेवक-वृन्दैः (/सेवक-वृकैः),

न वञ्च्यसे धूर्तैः,

न प्रलोभ्यसे वनिताभिः कामिनीभिः,

न विडम्ब्यसे परित्यज्यसे लक्ष्म्या,

न नर्त्यसे मदेन गर्वेण,

न उन्मत्ती-क्रियसे मदनेन कामेन,

न आक्षिप्यसे विषयैः इन्द्रियार्थैः desires,

न अवकृष्यसे आकृष्यसे रागेण,

न अपह्रियसे stolen सुखेन by happiness।

कामं (=यद्यपि) भवान् चन्द्रपीडः प्रकृत्या एव धीरः, पित्रा च समारोपित-संस्कारः,

(यद्यपि) तरल-हृदयम् अप्रतिबुद्धं च मदयन्ति धनानि despite monetary distractions,

तथापि भवद्-गुण-सन्तोषः चन्द्रपीडस्य गुणेषु सन्तुष्टिः माम् शुकनासम् एवं मुखरी-कृतवान् भाषितवान्।

इदमेव च पुनः पुनरभिधीयसे। विद्वांसमपि सचेतनमपि महासत्त्वमप्यभिजातमपि धीरमपि प्रयत्नवन्तमपि, पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीरिति, सर्वथा कल्याणैः पित्रा क्रियमाणमनुभवतु भवान् नवयौवराज्याभिषेकमङ्गलम्। कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम्। अवनमय द्विषतां शिरांसि। उन्नमय स्वबन्धुवर्गम्। अभिषेकानन्तरञ्च प्रारब्धदिग्विजयः परिभ्रमन् विजितामपि तव पित्रा सप्तद्वीपभूषणां पुनर्विजयस्व वसुन्धराम्। अयञ्च ते कालः प्रतापमारोपयितुम्। आरूढप्रतापो हि राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति” इत्येतावदभिधायोपशशाम (शुकनासः)।

इदम् पूर्वोक्तम् एव च पुनःपुनः अभिधीयसे उपदिश्यसे (मया शुकनासया, त्वं चन्द्रापीडः)।

विद्वांसम् अपि, सचेतनम् अपि, महा-सत्त्वम् अपि,

अभिजातम् अपि, धीरम् अपि, प्रयत्नवन्तम् अपि,

पुरुषम् इयं दुर्विनीता खली-करोति दुष्टीकरोति लक्ष्मीः इति,

सर्वथा कल्याणैः पित्रा तारापीडेन क्रियमाणम् अनुभवतु भवान् चन्द्रापीडः नव-यौवराज्य-अभिषेक-मङ्गलम्।

कुल-क्रम-आगताम् उद्वह धारय पूर्व-पुरुषैः ऊढां धृतां धुरम्।

अवनमय अवनतानि विधेहि द्विषतां शत्रूणां शिरांसि।

उन्नमय उन्नतं कुरु स्व-बन्धुवर्गम्।

अभिषेक-अनन्तरं च प्रारब्ध-दिग्विजयः परिभ्रमन्, विजिताम् अपि तव पित्रा, सप्त-द्वीप-भूषणां, पुनः विजयस्व वसुन्धराम्।

अयं च ते कालः प्रतापम् आरोपयितुम्।

आरूढ-प्रतापः हि राजा त्रैलोक्य-दर्शी इव सिद्ध-आदेशः भवति”

इति एतावत् अभिधाय उक्त्वा उपशशाम शान्तः अभूत् (शुकनासः)।

उपशान्तवचसि शकुनासे चन्द्रापीडस्ताभिरुपदेशवाग्भिः प्रक्षालित इव, उन्मीलित इव, स्वच्छीकृत इव, निर्मृष्ट इव, अभिषिक्त इव, अभिलिप्त इव, अलङ्कृत इव, पवित्रीकृत इव, उद्भासित इव, प्रीतहृदयो मुहूर्तं स्थित्वा स्वभवनमाजगाम।

उपशान्त-वचसि शकुनासे चन्द्रापीडः,
ताभिः उपदेश-वाग्भिः
प्रक्षालितः इव,
उन्मीलितः इव,
स्वच्छीकृतः इव,
निर्मृष्टः इव,
अभिषिक्तः इव,
अभिलिप्तः इव,
अलङ्कृतः इव,
पवित्रीकृतः इव,
उद्भासितः इव,
प्रीत-हृदयः प्रसन्नचित्तः मुहूर्तं (यावत् कालं) स्थित्वा स्व-भवनम् आजगाम गतवान्।

-*-*-*-

An english summary follows

Çukanāsopadeça Summary in English

[Extracted from C.M. Ridding's translation at gutenberg.org]

http://www.gutenberg.org/files/41128/41128-h/41128-h.htm

एवं समतिक्रामत्सु - "As the days thus passed on, the king, eager for the anointing of Candrāpīḍa as crown prince, appointed chamberlains to gather together all things needful for it; and when it was at hand, Çukanāsa, desirous of increasing the prince's modesty, great as it already was, spoke to him at length during one of his visits:

तात! चन्द्रापीड ! - 'Dear Candrāpīḍa, though thou hast learnt what is to be known, and read all the çāstras, no little remains for thee to learn. For truly the darkness arising from youth is by nature very thick, nor can it be pierced by the sun, nor cleft by the radiance of jewels, nor dispelled by the brightness of lamps. The intoxication of Lakshmī is terrible, and does not cease even in old age. There is, too, another blindness of power, evil, not to be cured by any salve. The fever of pride runs very high, and no cooling appliances can allay it. The madness that rises from tasting the poison of the senses is violent, and not to be counteracted by roots or charms. The defilement of the stain of passion is never destroyed by bathing or purification. The sleep of the multitude of royal pleasures is ever terrible, and the end of night brings no waking. Thus thou must often be told at length.

गर्भेश्वरत्वम् - Lordship inherited even from birth, fresh youth, peerless beauty, superhuman talent, all this is a long succession of ills. Each

of these separately is a home of insolence; how much more the assemblage of them! For in early youth the mind often loses its purity, though it be cleansed with the pure waters of the çāstras. The eyes of the young become inflamed, though their clearness is not quite lost. Nature, too, when the whirlwind of passion arises, carries a man far in youth at its own will, like a dry leaf borne on the wind. This mirage of pleasure, which captivates the senses as if they were deer, always ends in sorrow. When the mind has its consciousness dulled by early youth, the characteristics of the outer world fall on it like water, all the more sweetly for being but just tasted. Extreme clinging to the things of sense destroys a man, misleading him like ignorance of his bearings.

भवादृशा - But men such as thou art the fitting vessels for instruction. For on a mind free from stain the virtue of good counsel enters easily, as the moon's rays on a moon crystal. The words of a guru, though pure, yet cause great pain when they enter the ears of the bad, as water does; while in others they produce a nobler beauty, like the ear-jewel on an elephant. They remove the thick darkness of many sins, like the moon in the gloaming. The teaching of a guru is calming, and brings to an end the faults of youth by turning them to virtue, just as old age takes away the dark stain of the locks by turning them to gray.

अयमेव - This is the time to teach thee, while thou hast not yet tasted the pleasures of sense. For teaching pours away like water in a heart shattered by the stroke of love's arrow. Family and sacred tradition

are unavailing to the froward and undisciplined. Does a fire not burn when fed on sandal-wood? Is not the submarine fire the fiercer in the water that is wont to quench fire?

गुरुपदेशश्च - But the words of a guru are a bathing without water, able to cleanse all the stains of man; they are a maturity that changes not the locks to gray; they give weight without increase of bulk; though not wrought of gold, they are an ear-jewel of no common order; without light they shine; without startling they awaken. They are specially needed for kings, for the admonishers of kings are few. For from fear, men follow like an echo the words of kings, and so, being unbridled in their pride, and having the cavity of their ears wholly stopped, they do not hear good advice even when offered; and when they do hear, by closing their eyes like an elephant, they show their contempt, and pain the teachers who offer them good counsel. For the nature of kings, being darkened by the madness of pride's fever, is perturbed; their wealth causes arrogance and false self-esteem; their royal glory causes the torpor brought about by the poison of kingly power.

आलोकयतु - First, let one who strives after happiness look at Lakshmī. For this Lakshmī, who now rests like a bee on the lotus-grove of a circle of naked swords, has risen from the milk ocean, has taken her glow from the buds of the coral-tree, her crookedness from the moon's digit, her restlessness from the steed Uccaiḥçrava, her witchery from Kālakūṭa poison, her intoxication from nectar, and from the Kaustubha gem her hardness. All these she has taken as

keepsakes to relieve her longing with memory of her companions' friendship.

नह्येवंविधमपरिचितमिह - There is nothing so little understood here in the world as this base Lakshmī. When won, she is hard to keep; when bound fast by the firm cords of heroism, she vanishes; when held by a cage of swords brandished by a thousand fierce champions, she yet escapes; when guarded by a thick band of elephants, dark with a storm of ichor, she yet flees away. She keeps not friendships; she regards not race; she recks not of beauty; she follows not the fortunes of a family; she looks not on character; she counts not cleverness; she hears not sacred learning; she courts not righteousness; she honours not liberality; she values not discrimination; she guards not conduct; she understands not truth; she makes not auspicious marks her guide;

गन्धर्वनगरलेखेव - like the outline of an aërial city, she vanishes even as we look on her. She is still dizzy with the feeling produced by the eddying of the whirlpool made by Mount Mandara. As if she were the tip of a lotus-stalk bound to the varying motion of a lotus-bed, she gives no firm foothold anywhere. Even when held fast with great effort in palaces, she totters as if drunk with the ichor of their many wild elephants. She dwells on the sword's edge as if to learn cruelty. She clings to the form of Nārāyaṇa as if to learn constant change of form.

अप्रत्ययबहुला - Full of fickleness, she leaves even a king, richly endowed with friends, judicial power, treasure, and territory, as she leaves a lotus at the end of day, though it have root, stalk, bud, and wide-spreading petals. Like a creeper, she is ever a parasite. Like Gangā, though producing wealth, she is all astir with bubbles; like the sun's ray, she alights on one thing after another; like the cavity of hell, she is full of dense darkness. Like the demon Hiḍambā, her heart is only won by the courage of a Bhīma; like the rainy season, she sends forth but a momentary flash;

दुष्टपिशाचीव - like an evil demon, she, with the height of many men, crazes the feeble mind. As if jealous, she embraces not him whom learning has favoured; she touches not the virtuous man, as being impure; she despises a lofty nature as unpropitious; she regards not the gently-born, as useless. She leaps over a courteous man as a snake; she avoids a hero as a thorn; she forgets a giver as a nightmare; she keeps far from a temperate man as a villain; she mocks at the wise as a fool;

परस्परविरुद्धञ्चेन्द्रजालमिव - she manifests her ways in the world as if in a jugglery that unites contradictions. For, though creating constant fever, she produces a chill; though exalting men, she shows lowness of soul; though rising from water, she augments thirst; though bestowing lordship, she shows an unlordly nature; though loading men with power, she deprives them of weight; though sister of nectar, she leaves a bitter taste; though of earthly mould, she is

invisible; though attached to the highest, she loves the base; like a creature of dust, she soils even the pure.

यथा यथा चेयं - Moreover, let this wavering one shine as she may, she yet, like lamplight, only sends forth lamp-black. For she is the fostering rain of the poison-plants of desire, the hunter's luring song to the deer of the senses, the polluting smoke to the pictures of virtue, the luxurious couch of infatuation's long sleep, the ancient watch-tower of the demons of pride and wealth. She is the cataract gathering over eyes lighted by the çāstras, the banner of the reckless, the native stream of the alligators of wrath, the tavern of the mead of the senses, the music-hall of alluring dances, the lair of the serpents of sin, the rod to drive out good practices. She is the untimely rain to the kalahaṃsas of the virtues, the hotbed of the pustules of scandal, the prologue of the drama of fraud, the roar of the elephant of passion, the slaughter-house of goodness, the tongue of Rāhu for the moon of holiness.

न हि तं पश्यामि - Nor see I any who has not been violently embraced by her while she was yet unknown to him, and whom she has not deceived. Truly, even in a picture she moves; even in a book she practises magic; even cut in a gem she deceives; even when heard she misleads; even when thought on she betrays.

एवंविधयापि चानया - "'When this wretched evil creature wins kings after great toil by the will of destiny, they become helpless, and the abode of every shameful deed. For at the very moment of

coronation their graciousness is washed away as if by the auspicious water-jars; their heart is darkened as by the smoke of the sacrificial fire; their patience is swept away as by the kuça brooms of the priest; their remembrance of advancing age is concealed as by the donning of the turban; the sight of the next world is kept afar as by the umbrella's circle; truth is removed as by the wind of the cowries; virtue is driven out as by the wands of office; the voices of the good are drowned as by cries of "All hail!" and glory is flouted as by the streamers of the banners.

[तथा हि -] केचित् श्रम-वश - ""'For some kings are deceived by successes which are uncertain as the tremulous beaks of birds when loose from weariness, and which, though pleasant for a moment as a firefly's flash, are contemned by the wise; they forget their origin in the pride of amassing a little wealth, and are troubled by the onrush of passion as by a blood-poisoning brought on by accumulated diseases; they are tortured by the senses, which though but five, in their eagerness to taste every pleasure, turn to a thousand; they are bewildered by the mind, which, in native fickleness, follows its own impulses, and, being but one, gets the force of a hundred thousand in its changes.

ग्रहैरिव गृह्यन्ते - Thus they fall into utter helplessness. They are seized by demons, conquered by imps, possessed by enchantments, held by monsters, mocked by the wind, swallowed by ogres. Pierced by the arrows of Kāma, they make a thousand contortions; scorched by covetousness, they writhe; struck down by fierce blows, they sink

down. Like crabs, they sidle; like cripples, with steps broken by sin, they are led helpless by others; like stammerers from former sins of falsehood, they can scarce babble; like saptacchada trees, they produce headache in those near them; like dying men, they know not even their kin; like purblind men, they cannot see the brightest virtue; like men bitten in a fatal hour, they are not waked even by mighty charms; like lac-ornaments, they cannot endure strong heat; like rogue elephants, being firmly fixed to the pillar of self-conceit, they refuse teaching; bewildered by the poison of covetousness, they see everything as golden; like arrows sharpened by polishing, when in the hands of others they cause destruction; with their rods they strike down great families, like high-growing fruit; like untimely blossoms, though fair outwardly, they cause destruction; they are terrible of nature, like the ashes of a funeral pyre; like men with cataract, they can see no distance; like men possessed, they have their houses ruled by court jesters; when but heard of, they terrify, like funeral drums; when but thought of, like a resolve to commit mortal sin, they bring about great calamity; being daily filled with sin, they become wholly puffed up. In this state, having allied themselves to a hundred sins, they are like drops of water hanging on the tip of the grass on an anthill, and have fallen without perceiving it.

अपरे तु – "'But others are deceived by rogues intent on their own ends, greedy of the flesh-pots of wealth, cranes of the palace lotus-beds! "Gambling," say these, "is a relaxation; adultery a sign of

cleverness; hunting, exercise; drinking, delight; recklessness, heroism; neglect of a wife, freedom from infatuation; contempt of a guru's words, a claim to others' submission; unruliness of servants, the ensuring of pleasant service; devotion to dance, song, music, and bad company, is knowledge of the world; hearkening to shameful crimes is greatness of mind; tame endurance of contempt is patience; self-will is lordship; disregard of the gods is high spirit; the praise of bards is glory; restlessness is enterprise; lack of discernment is impartiality." Thus are kings deceived with more than mortal praises by men ready to raise faults to the grade of virtues, practised in deception, laughing in their hearts, utterly villainous; and thus these monarchs, by reason of their senselessness, have their minds intoxicated by the pride of wealth, and have a settled false conceit in them that these things are really so; though subject to mortal conditions, they look on themselves as having alighted on earth as divine beings with a superhuman destiny; they employ a pomp in their undertakings only fit for gods and win the contempt of all mankind.

आत्मविडम्बनाञ्चानुजीविना - They welcome this deception of themselves by their followers. From the delusion as to their own divinity established in their minds, they are overthrown by false ideas, and they think their own pair of arms have received another pair; they imagine their forehead has a third eye buried in the skin. They consider the sight of themselves a favour; they esteem their glance a benefit; they regard their words as a present; they hold their

command a glorious boon; they deem their touch a purification. Weighed down by the pride of their false greatness, they neither do homage to the gods, nor reverence Brahmans, nor honour the honourable, nor salute those to whom salutes are due, nor address those who should be addressed, nor rise to greet their gurus. They laugh at the learned as losing in useless labour all the enjoyment of pleasure; they look on the teaching of the old as the wandering talk of dotage; they abuse the advice of their councillors as an insult to their own wisdom; they are wroth with the giver of good counsel.

सर्वथा तमभिनन्दन्ति - ‘“‘At all events, the man they welcome, with whom they converse, whom they place by their side, advance, take as companion of their pleasure and recipient of their gifts, choose as a friend, the man to whose voice they listen, on whom they rain favours, of whom they think highly, in whom they trust, is he who does nothing day and night but ceaselessly salute them, praise them as divine, and exalt their greatness.

‘“‘What can we expect of those kings whose standard is a law of deceit, pitiless in the cruelty of its maxims; whose gurus are family priests, with natures made merciless by magic rites; whose teachers are councillors skilled to deceive others; whose hearts are set on a power that hundreds of kings before them have gained and lost; whose skill in weapons is only to inflict death; whose brothers, tender as their hearts may be with natural affection, are only to be slaughtered.

तदेवंप्रायातिकुटिल-कष्ट-चेष्टा-सहस्र - "“‘Therefore, my Prince, in this post of empire which is terrible in the hundreds of evil and perverse impulses which attend it, and in this season of youth which leads to utter infatuation, thou must strive earnestly not to be scorned by thy people, nor blamed by the good, nor cursed by thy gurus, nor reproached by thy friends, nor grieved over by the wise. Strive, too, that thou be not exposed by knaves, deceived by sharpers, preyed upon by villains, torn to pieces by wolvish courtiers, misled by rascals, deluded by women, cheated by fortune, led a wild dance by pride, maddened by desire, assailed by the things of sense, dragged headlong by passion, carried away by pleasure.

"“‘Granted that by nature thou art steadfast, and that by thy father's care thou art trained in goodness, and moreover, that wealth only intoxicates the light of nature, and the thoughtless, yet my very delight in thy virtues makes me speak thus at length.

इदमेव च पुनः पुनरभिधीयसे - "“‘Let this saying be ever ringing in thine ears: There is none so wise, so prudent, so magnanimous, so gracious, so steadfast, and so earnest, that the shameless wretch Fortune cannot grind him to powder. Yet now mayest thou enjoy the consecration of thy youth to kinghood by thy father under happy auspices. Bear the yoke handed down to thee that thy forefathers have borne. Bow the heads of thy foes; raise the host of thy friends; after thy coronation wander round the world for conquest; and bring under thy sway the earth with its seven continents subdued of yore by thy father.

““‘This is the time to crown thyself with glory. A glorious king has his commands fulfilled as swiftly as a great ascetic.’

उपशान्तवचसि - ‘“Having said thus much, he was silent, and by his words Candrāpīḍa was, as it were, washed, wakened, purified, brightened, bedewed, anointed, adorned, cleansed, and made radiant, and with glad heart he returned after a short time to his own palace.